ओं वांमे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितमाविरावीर्मा एधि ।
वेदस्य मे आणीस्थाः श्रुतं मे मा
प्रहासीरनेनाधीतेनाऽहोरात्रांसंदधाम्युतं वदिष्यामि ।
सत्यं वदिष्यामि ।
तन्मामवतु ।
तद्वक्तारमवतु ।
अवतुमामवतु वक्तारं ॥
ओं शांतिः शांतिः शांतिः ॥

आत्मा वा इदमेक एवाग्र आसीत् ।
नान्यत्किंचन मिषत् ।
स ईक्षत लोकान्नु सृजा इति ॥ १,१.१ ॥

स इमांल्लोकानसृजत ।
अंभो मरीचीर्मरमापोऽदोऽंभः परेण दिवम् द्यौः
प्रतिष्ठाऽंतरिक्षं मरीचयः ।
पृथिवी मरो या अधस्तात्ता आपः ॥ १,१.२ ॥

स ईक्षतेमे नु लोका लोकपालान्नु सृजा इति ।
सोऽद्भ्य एव पुरुषं समुद्धृत्यामूर्च्छयत् ॥ १,१.३ ॥

तमभ्यतपत्तस्याभितप्तस्य मुखं निरभिद्यत यथाऽंडम् ।
मुखाद्वाग्वाचोऽग्निर्नासिके निरभिद्येतां ।
नासिकाभ्यां प्राणः ।
प्राणाद्वायुरक्षिणी निरभिद्येतामक्षीभ्यां
चक्षुश्चक्षुष आदित्यः ।
कर्णौ निरभिद्येतां ।
कर्णाभ्यां श्रोत्रं ।

श्रोत्राद्दिशस्त्वं निरभिद्यत ।
त्वचो लोमानि ।
लोमभ्य ओषधिवनस्पतयो ।
हृदयं निरभिद्यत ।
हृदयान्मनो ।
मनसश्चंद्रमा ।
नाभिर्निरभिद्यत ।
नाभ्या अपानोऽपानान्मृत्युः ।
शिश्नं निरभिद्यत ।
शिश्नाद्रेतो ।
रेतस आपः ॥ १,१.४ ॥

**॥ इति प्रथमोऽध्यायस्य प्रथमः खंडः ॥**

ता एता देवताः सृष्टा अस्मिन्महत्यर्णवे प्रापतन् ।
तमशनापिपासाभ्यामन्ववार्जत् ।
ता एनमब्रुवन्नायतनं नः प्रजानीहि ।
यस्मिन्प्रतिष्ठिता अन्नमदामेति ॥ १,२.१ ॥

ताभ्यो गामानयत्ता अब्रुवन्न वै नोऽयमलमिति ।
ताभ्योऽश्वमानयत्ता अब्रुवन्न वै नोऽयमलमिति ॥ १,२.२ ॥

ताभ्यः पुरुषमानयत्ता अब्रुवन्सुकृतं बतेति
पुरुषो वाव सुकृतं ।
ता अब्रवीद्यथायतनं प्रविशतेति ॥ १,२.३ ॥

अग्निर्वाग्भूत्वा मुखं प्राविशद्वायुः
प्राणो भूत्वा नासिके प्राविशदादित्यश्चक्षुर्भूत्वाऽक्षिणी

प्राविशादिशः श्रोत्रं भूत्वा कर्णौ
प्राविशन्नोषधिवनस्पतयो लोमानि भूत्वा त्वचं
प्राविशंश्चंद्रमा मनो भूत्वा हृदयं
प्राविशन्मृत्युरपानो भूत्वा नाभिं
प्राविशदापो रेतो भूत्वा शिश्नं प्राविशन् ॥ १,२.४ ॥

तमशनापिपासे अब्रूतामवाभ्यामभिप्रजानीहीति ।
ते अब्रवीदेतास्वेव वां देवतास्वाभजाम्येतासु भागिन्यौ करोमीति ।
तस्माद्यस्यै कस्यै च देवतायै हविर्गृह्यते
भागिन्यावेवास्यामशनापिपासे भवतः ॥ १,२.५ ॥

**॥ इति प्रथमोऽध्यायस्य द्वितीयः खंडः ॥**

स ईक्षतेमे नु लोकाश्च
लोकपालाश्चान्नमेभ्यः सृजा इति ॥ १,३.१ ॥

सोऽपोऽभ्यतपत्ताभ्योऽभितप्ताभ्यो मूर्तिरजायत ।
या वै सा मूर्तिरजायतान्नं वै तत् ॥ १,३.२ ॥

तदेततभिसृष्टं परांत्यजिघांसत्तद्वाचाऽजिघृक्षत्तन्नाशक्नोद्वाचा ग्रहीतुं ।
स यद्धैनद्वाचाऽग्रहैष्यदभिव्याहृत्य हैवान्नमत्रप्स्यत् ॥ १,३.३ ॥

तत्प्राणेनाजिघृक्षत्तन्नाशक्नोत् प्राणेन ग्रहीतुं ।
स यद्धैनत्प्राणेनाग्रहैष्यदभिप्राण्य हैवान्नमत्रप्स्यत् ॥ १,३.४ ॥

तच्चक्षुषाजिघृक्षत्तन्नाशक्नोच्चक्षुषा ग्रहीतुं ।
स यद्धैनच्चक्षुषाऽग्रहैष्यत् दृष्ट्वा हैवान्नमत्रप्स्यत् ॥ १,३.५ ॥

तच्छ्रोत्रेणाजिघृक्षत्तन्नाशक्नोच्छ्रोत्रेण ग्रहीतुं ।
स यद्धैनच्छ्रोत्रेणाग्रहैष्यच्छ्रुत्वा हैवान्नमत्रप्स्यत् ॥ १,३.६ ॥

तत्त्वचाऽजिघृक्षत्तन्नाशक्नोत्त्वचा ग्रहीतुं ।
स यद्धैनत्त्वचाग्रहैष्यत्स्पृष्ट्वा हैवान्नमत्रप्स्यत् ॥ १,३.७ ॥

तन्मनसाऽजिघृक्षत्तन्नाशक्नोन्मनसा ग्रहीतुं ।
स यद्धैनन्मनसाग्रहैष्यद्ध्यात्वा हैवान्नमत्रप्स्यत् ॥ १,३.८ ॥

तच्छिश्नेनाजिघृक्षत्तन्नाशक्नोच्छिश्नेन ग्रहीतुं ।
स यद्धैनच्छिश्नेनाग्रहैष्यद्विसृज्य हैवान्नमत्रप्स्यत् ॥ १,३.९ ॥

तदपानेनाजिघृक्षत्तदावयत् ।
सैषोऽन्नस्य ग्रहो यद्वायुरन्नायुर्वा एष यद्वायुः ॥ १,३.१० ॥

स ईक्षत कथं न्विदं मदृते स्यादिति ।
स ईक्षत कतरेण प्रपद्या इति ।
स ईक्षत यदि वाचाऽभिव्याहृतं यदि प्राणेनाभिप्राणितं यदि चक्षुषा दृष्टं यदि श्रोत्रेण श्रुतं यदि त्वचा स्पृष्टं यदि मनसा ध्यातं यद्यपानेनाभ्यपानितं यदि शिश्नेन विसृष्टमथ कोऽहमिति ॥ १,३.११ ॥

स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत ।
सैषा विदृतिर्नामद्वास्तदेतन्नान्दनम् ।
तस्य त्रय आवसथास्त्रयः स्वप्ना
अयमावसथोऽयमावसथोऽयमावसथ इति ॥ १,३.१२ ॥

स जातो भूतान्यभिव्यैख्यत्किमिहान्यं वावदिषदिति ।
स एतमेव पुरुषं ब्रह्म ततममपश्यदिदमदर्शमिती ॥ १,३.१३ ॥

तस्मादिदंद्रो नामेदंद्रो ह वै नाम ।
तमिदंद्रं संतमिंद्र इत्याचक्षते परोक्षेण ।
परोक्षप्रिया इव हि देवाः ।
परोक्षप्रिया इव हि देवाः ॥ १,३.१४ ॥

**॥ इति प्रथमोऽध्यायस्य तृतीयः खंडः ॥**

**॥ इत्यैतरेये प्रथमोऽध्यायः ॥**

**अपक्रामंतु गर्भिण्यः ॥**

पुरुषे ह वा अयमादितो गर्भो भवति ।
यदेतद्रेतस्तदेतत्सर्वेभ्योऽगेभ्यस्तेजः संभूतमात्मन्येवाऽऽत्मानं बिभर्ति ।
तद्यदा स्त्रियां सिंचत्यथैनज्जनयति तदस्य प्रथमं जन्म ॥ २.१ ॥
तत्स्त्रिया आत्मभूयं गच्चति यथा स्वमंगं तथा ।
तस्मादेनां न हिनस्ति ।
सास्यैतम् आत्मानम् अत्र गतं भावयति ॥ २.२ ॥

सा भावयित्री भावयितव्या भवति ।
तं स्त्री गर्भं बिभर्ति ।
सोऽग्र एव कुमारं जन्मनोऽग्रेऽधि भावयति ।
स यत्कुमारं जन्मनोऽग्रेऽधि भावयत्यात्मानमेव तद्भावयत्येषां लोकानां
संतत्या एवं संतता हीमे लोकास्तदस्य द्वितीयं जन्म ॥ २.३ ॥

सोऽस्यायमात्मा पुण्येभ्यः कर्मेभ्यः प्रतिधीयते ।
अथास्यायमितर आत्मा कृतकृत्यो वयोगतः प्रैति ।
स इतः प्रयन्नेव पुनर्जायते तदस्य तृतीयं जन्म ॥ २.४ ॥

**तदुक्तमृषिणा ॥**
गर्भे नु सन्नन्वेषामवेदमहं देवानां जनिमानि विश्वा ।
शतं मा पुर आयसीररक्षन्नधः श्येनो जवसा निरदीयमिति ।
गर्भ एवैतच्छयानो वामदेव एवमुवाच ॥ २.५ ॥

स एवं विद्वानस्माच्छरीरभेदादूर्ध्व उत्क्रम्यामुष्मिन्स्वर्गे
लोके सर्वान्कामानाप्त्वाऽमृतः समभवत्समभवत् ॥ २.६ ॥

**॥ इति द्वितीयोऽध्यायस्य प्रथमः खंडः ॥**

**॥ इत्यैतरेये द्वितीयोऽध्यायः ॥**

हरिः ओं ।
कोऽयमात्मेति वयमुपास्महे ।
कतरः स आत्मा येन वा रूपं पश्यति येन वा शब्दं शृणोति
येन वा गंधानाजिघ्रति येन वा वाचं व्याकरोति
येन वा स्वादु चास्वादु च विजानाति ॥ ३.१ ॥

यदेतद्धृदयं मनश्चैतत् ।
संज्ञानमाज्ञानं विज्ञानं प्रज्ञानं मेधा दृष्टिर्धृतिर्मतिर्मनीषा
जूतिः स्मृतिः संकल्पः क्रतुरसुः कामो वश इति ।
सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवंति ॥ ३.२ ॥

एष ब्रह्मेष इंद्र एष प्रजापतिरेते सर्वे देवा ।
इमानि च पंच महाभूतानि पृथिवी वायुराकाश आपो ज्योतींषीत्येतानीमानि च
क्षुद्रमिश्राणीव बीजानीतराणि चेतराणि चांडजानि च जारुजानि च
स्वेदजानि चोद्भिज्जानि चाश्वा गावः पुरुषा हस्तिनो यत्किंचेदम्

प्राणि जंगमं च पतत्रि च यच्च स्थावरम् ।
सर्वं तत्प्रज्ञानेत्रम् ।
प्रज्ञाने प्रतिष्ठितम् ।
प्रज्ञानेत्रो लोकः ।
प्रज्ञा प्रतिष्ठा ।
प्रज्ञानं ब्रह्म ॥ ३.३ ॥

स एतेन प्रज्ञेनाऽऽत्मनाऽस्माल्लोकादुत्क्रम्यामुष्मिन्स्वर्गे लोके
सर्वान्कामानाप्त्वामृतः समभवत् समभवत् ॥ ३.४ ॥

**॥ इति तृतीयोऽध्यायस्य प्रथमः खंडः ॥**

**॥ इत्यैतरेये तृतीयोऽध्यायः ॥**

हरिः ओं ॥ ओं वांमे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितमाविरावीर्मा एधि ।
वेदस्य मे आणीस्थाः श्रुतं मे मा
प्रहासीरनेनाधीतेनाऽहोरात्रांसंदधाम्युतं वदिष्यामि ।
सत्यं वदिष्यामि ।
तन्मामवतु ।
तद्वक्तारमवतु ।
अवतु मामवतु वक्तारमवतु वक्तारम् ॥
ओं शांतिः शांतिः शांतिः ॥